# ॥ श्रीकमलास्तोत्रम् ॥

श्री लक्ष्म्यै नमः ।
श्री शङ्कर उवाच ।
अथातः सम्प्रवक्ष्यामि लक्ष्मीस्तोत्रमनुत्तमम् ।
पठनात् श्रवणाद्यस्य नरो मोक्षमावाप्नुयात् ॥१॥
गुह्याद्गुह्यतरं पुण्यं सर्वदेवनमस्कृतम् ।
सर्वमन्त्रमयं साक्षाच्छृणु पर्वतनन्दिनि ॥२ ॥
अनन्तरूपिणी लक्ष्मीरपारगुणसागरी ।
अणिमादिसिद्धिदात्री शिरसा प्रणमाम्यहम् ॥३॥
आपदुद्धारिणी त्वं हि आद्या शक्तिः शुभा परा ।
आद्या आनन्ददात्री च शिरसा प्रणमाम्यहम् ॥४॥
इन्दुमुखी इष्टदात्री इष्टमन्त्रस्वरूपिणी ।
इच्छामयी जगन्मातः शिरसा प्रणमाम्यहम् ॥५॥
उमा उमापतेस्त्वन्तु ह्युत्कण्ठाकुलनाशिनी ।
उर्वीश्वरी जगन्मातर्लक्ष्मि देवि नमोऽस्तु ते ॥६॥
ऐरावतपतिपूज्या ऐश्वर्याणां प्रदायिनी ।
औदार्यगुणसम्पन्ना लक्ष्मि देवि नमोऽस्तु ते ॥७॥
कृष्णवक्षःस्थिता देवि कलिकल्मषनाशिनी ।
कृष्णचित्तहरा कर्त्री शिरसा प्रणमाम्यहम् ॥८॥
कन्दर्पदमना देवि कल्याणी कमलानना ।
करुणार्णवसम्पूर्णा शिरसा प्रणमाम्यहम् ॥९॥
खञ्जनाक्षी खञ्जनासा देवि खेदविनाशिनी ।
खञ्जरीटगतिश्चैव शिरसा प्रणमाम्यहम् ॥१०॥
गोविन्दवल्लभा देवी गन्धर्वकुलपावनी ।
गोलोकवासिनी मातः शिरसा प्रणमाम्यहम् ॥११॥
ज्ञानदा गुणदा देवि गुणाध्यक्षा गुणाकरी ।
गन्धपुष्पधरा मातः शिरसा प्रणमाम्यहम् ॥१२॥
घनश्यामप्रिया देवि घोरसंसारतारिणी ।
घोरपापहरा चैव शिरसा प्रणमाम्यहम् ॥१३॥
चतुर्वेदमयी चिन्त्या चित्ताचैतन्यदायिनी ।
चतुराननपूज्या च शिरसा प्रणमाम्यहम् ॥१४॥
चैतन्यरूपिणी देवि चन्द्रकोटिसमप्रभा ।
चन्द्रार्कनखरज्योतिर्लक्ष्मि देवि नमाम्यहम् ॥१५॥
चपला चतुराध्यक्षी चरमे गतिदायिनी ।
चराचरेश्वरी लक्ष्मि शिरसा प्रणमाम्यहम् ॥१६॥
छत्रचामरयुक्ता च छलचातुर्यनाशिनी ।
छिद्रौघहारिणी मातः शिरसा प्रणमाम्यहम् ॥१७॥
जगन्माता जगत्कर्त्री जगदाधाररूपिणी ।
जयप्रदा जानकी च शिरसा प्रणमाम्यहम् ॥१८॥
जानकीशप्रिया त्वं हि जनकोत्सवदायिनी ।
जीवात्मनां च त्वं मातः शिरसा प्रणमाम्यहम् ॥१९॥
झिञ्जीरवस्वना देवि ञ्झावातनिवारिणी ।
झर्झरप्रियवाद्या च शिरसा प्रणमाम्यहम् ॥२०॥
अर्थप्रदायिनींत्वं हि त्वञ्च ठकाररूपिणी ।
ढक्कादिवाद्यप्रणया डम्फवाद्यविनोदिनी॥
डमरूप्रणया मातः शिरसा प्रणमाम्यहम् ॥२१॥
तप्तकाञ्चनवर्णाभा त्रैलोक्यलोकतारिणी ।
त्रिलोकजननी लक्ष्मि शिरसा प्रणमाम्यहम् ॥२२॥
त्रिलोक्यसुन्दरी त्वं हि तापत्रयनिवारिणी ।
त्रिगुणधारिणी मातः शिरसा प्रणमाम्यहम् ॥२३॥
त्रैलोक्यमङ्गला त्वं हि तीर्थमूलपदद्वया ।
त्रिकालज्ञा त्राणकर्त्री शिरसा प्रणमाम्यहम् ॥२४॥
दुर्गतिनाशिनी त्वं हि दारिद्र्यापद्विनाशिनी ।
द्वारकावासिनी मातः शिरसा प्रणमाम्यहम् ॥२५॥
देवतानां दुराराध्या दुःखशोकविनाशिनी ।
दिव्याभरणभूषाङ्गी शिरसा प्रणमाम्यहम् ॥२६॥
दामोदरप्रिया त्वं हि दिव्ययोगप्रदर्शिनी ।
दयामयी दयाध्यक्षी शिरसा प्रणमाम्यहम् ॥२७॥
ध्यानातीता धराध्यक्षा धनधान्यप्रदायिनी ।
धर्मदा धैर्यदा मातः शिरसा प्रणमाम्यहम् ॥२८॥
नवगोरोचना गौरी नन्दनन्दनगेहिनी ।
नवयौवनचार्वङ्गी शिरसा प्रणमाम्यहम् ॥२९॥
नानारत्नादिभूषाढ्या नानारत्नप्रदायिनी ।
नितम्बिनी नलिनाक्षी लक्ष्मि देवि नमोऽस्तु ते ॥३०॥
निधुवनप्रेमानन्दा निराश्रयगतिप्रदा ।
निर्विकारा नित्यरूपा लक्ष्मि देवि नमोऽस्तु ते ॥३१॥
पूर्णानन्दमयी त्वं हि पूर्णब्रह्मसनातनी ।
परा शक्तिः परा भक्तिर्लक्ष्मि देवि नमोऽस्तु ते ॥३२॥
पूर्णचन्द्रमुखी त्वं हि परानन्दप्रदायिनी ।
परमार्थप्रदा लक्ष्मि शिरसा प्रणमाम्यहम् ॥३३॥
पुण्डरीकाक्षिणी त्वं हि पुण्डरीकाक्षगेहिनी ।

पद्मरागधरा त्वं हि शिरसा प्रणमाम्यहम् ॥३४॥
पद्मा पद्मासना त्वं हि पद्ममालाविधारिणी ।
प्रणवरूपिणी मातः शिरसा प्रणमाम्यहम् ॥३५॥
फुल्लेन्दुवदना त्वं हि फणिवेणिविमोहिनी ।
फणिशायिप्रिया मातः शिरसा प्रणमाम्यहम् ॥३६॥
विश्वकर्त्री विश्वभर्त्री विश्वत्रात्री विश्वेश्वरी ।
विश्वाराध्या विश्वबाह्या लक्ष्मि देवि नमोऽस्तु ते ॥३७॥
विष्णुप्रिया विष्णुशक्तिर्बीजमन्त्रस्वरूपिणी ।
वरदा वाक्यसिद्धा च शिरसा प्रणमाम्यहम् ॥३८॥
वेणुवाद्यप्रिया त्वं हि वंशीवाद्यविनोदिनी ।
विद्युद्गौरी महादेवि लक्ष्मी देवि नमोऽस्तु ते ॥३९॥
भुक्तिमुक्तिप्रदा त्वं हि भक्तानुग्रहकारिणी ।
भवार्णवत्राणकर्त्री लक्ष्मि देवि नमोऽस्तु ते ॥४०॥
भक्तप्रिया भागीरथी भक्तमङ्गलदायिनी ।
भयादा भयदात्री च लक्ष्मि देवि नमोऽस्तु ते ॥४१॥
मनोऽभीष्टप्रदा त्वं हि महामोहविनाशिनी ।
मोक्षदा मानदात्री च लक्ष्मि देवि नमोऽस्तु ते ॥४२॥
महाधन्या महामान्या माधवस्यात्ममोहिनी ।
मुखराप्राणहन्त्री च लक्ष्मि देवि नमोऽतु ते ॥४३॥
यौवनपूर्णसौन्दर्या योगमाया तथेश्वरी ।
युग्मश्रीफलवृक्षा च लक्ष्मि देवि नमोऽस्तु ते ॥४४॥
युग्माङ्गदविभूषाढ्या युवतीनां शिरोमणिः ।
यशोदासुतपत्नी च लक्ष्मि देवि नमोऽस्तु ते ॥४५ ॥
रूपयौवनसम्पन्ना रत्नालङ्कारधारिणी ।
राकेन्दुकोटिसौन्दर्या लक्ष्मि देवि नमोऽस्तु ते ॥४६॥
रमा रामा रामपत्नी राजराजेश्वरी तथा ।
राज्यदा राज्यहन्त्री च लक्ष्मि देवि नमोऽस्तु ते ॥४७॥
लीलालावण्यसम्पन्ना लोकानुग्रहकारिणी ।
ललना प्रीतिदात्री च लक्ष्मि देवि नमोऽस्तु ते ॥४८॥
विद्याधरी तथा विद्या वसुदा त्वन्तु वन्दिता ।
विन्ध्याचलवासिनी च लक्ष्मि देवि नमोऽस्तु ते ॥४९॥
शुभकाञ्चनगौराङ्गी शङ्खकङ्कणधारिणी ।
शुभदा शीलसम्पन्ना लक्ष्मि देवि नमोऽस्तु ते ॥५०॥
षट्चक्रभेदिनी त्वं हि षडैश्वर्यप्रदायिनी ।
षोडशी वयसा त्वन्तु लक्ष्मि देवि नमोऽस्तु ते ॥५१॥
सदानन्दमयी त्वं हि सर्वसम्पत्तिदायिनी ।
संसारतारिणी देवि शिरसा प्रणमाम्यहम् ॥५२॥
सुकेशी सुखदा देवि सुन्दरी सुमनोरमा ।
सुरेश्वरी सिद्धिदात्री शिरसा प्रणमाम्यहम् ॥५३॥
सर्वसङ्कटहन्त्री त्वं सत्यसत्त्वगुणान्विता ।
सीतापतिप्रिया देवि शिरसा प्रणमाम्यहम् ॥५४॥
हेमाङ्गिनी हास्यमुखी हरिचित्तविमोहिनी ।
हरिपादप्रिया देवि शिरसा प्रणमाम्यहम् ॥५५॥
क्षेमङ्करी क्षमादात्री क्षौमवासोविधारिणी ।
क्षीणमध्या च क्षेत्राङ्गी लक्ष्मि देवि नमोऽस्तु ते ॥५६॥

॥फलश्रुति ॥

श्री शङ्कर उवाच ।

अकारादि क्षकारान्तं लक्ष्मीदेव्याः स्तवं शुभम् ।
पठितव्यं प्रयत्नेन त्रिसन्ध्यञ्च दिने दिने ॥ ५७॥
पूजनीया प्रयत्नेन कमला करुणामयी ।
वाञ्छाकल्पलता साक्षाद्भुक्तिमुक्ति प्रदायिनी ॥५८॥
इदं स्तोत्रं पठेद्यस्तु शृणुयात् श्रावयेदपि ।
इष्टसिद्धिर्भवेत्तस्य सत्यं सत्यं हि पार्वति ॥५९॥
इदं स्तोत्रं महापुण्यं यः पठेद्भक्तिसंयुतः ।
तञ्च दृष्ट्वा भवेन्मूको वादी सत्यं न संशयः ॥६०॥
शृणुयाच्छ्रावयेद्यस्तु पठेद्वा पाठयेदपि ।
राजानो वशमायान्ति तं दृष्ट्वा गिरिनन्दिनि ॥६१॥
तं दृष्ट्वा दुष्टसङ्घाश्च पलायन्ते दिशो दश ।
भूतप्रेतग्रहा यक्षा राक्षसाः पन्नगादयः॥
विद्रवन्ति भयार्ता वै स्तोत्रस्यापि च कीर्तनात् ॥६२॥
सुराश्च ह्यसुराश्चैव गन्धर्वकिन्नरादयः ।
प्रणमन्ति सदा भक्त्या तं दृष्ट्वा पाठकं मुदा ॥६३॥
धनार्थी लभते चार्थं पुत्रार्थी च सुतं लभेत् ।
राज्यार्थी लभते राज्यं स्तवराजस्य कीर्तनात् ॥६४॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महापापोपपापञ्च तरन्ति स्तवकीर्तनात् ॥६५॥
गद्यपद्यमयी वाणी मुखात्तस्य प्रजायते ।
अष्टसिद्धिमवाप्नोति लक्ष्मीस्तोत्रस्य कीर्तनात् ॥६६॥
वन्ध्या चापि लभेत् पुत्रं गर्भिणी प्रसवेत्सुतम् ।
पठनात्स्मरणात् सत्यं वच्मि ते गिरिनन्दिनि ॥६७॥
भूर्जपत्रे समालिख्य रोचनाकुङ्कुमेन तु ।
भक्त्या सम्पूजयेद्यस्तु गन्धपुष्पाक्षतैस्तथा ॥६८॥
धारयेद्दक्षिणे बाहौ पुरुषः सिद्धिकाङ्क्षया ।
योषिद्वामभुजे धृत्वा सर्वसौख्यमयी भवेत् ॥६९॥

विषं निर्विषतां याति अग्निर्याति च शीतताम् ।
शत्रवो मित्रतां यान्ति स्तवस्यास्य प्रसादतः ॥७०॥
बहुना किमिहोक्तेन स्तवस्यास्य प्रसादतः ।
वैकुण्ठे च वसेन्नित्यं सत्यं वच्मि सुरेश्वरि ॥७१॥
॥अथ लक्ष्मीकवच॥
लक्ष्मीर्मे चाग्रतः पातु कमला पातु पृष्ठतः ।
नारायणी शीर्षदेशे सर्वाङ्गे श्रीस्वरूपिणी ॥७२॥
रामपत्नी प्रत्यङ्गे तु सदावतु रमेश्वरी ।
विशालाक्षी योगमाया कौमारी चक्रिणी तथा ॥७३॥
जयदात्री धनदात्री पाशाक्षमालिनी शुभा ।
हरिप्रिया हरिरामा जयङ्करी महोदरी ॥७४॥
कृष्णपरायणा देवी श्रीकृष्णमनोमोहिनी॥
जयङ्करी महारौद्री सिद्धिदात्री शुभङ्करी ॥७५॥
सुखदा मोक्षदा देवी चित्रकूटवासिनी ।
भयं हरेत्सदा पायाद् भवबन्धाद्विमोचयेत् ॥७६॥
कवचन्तु महापुण्यं यः पठेत् भक्तिसंयुतः ।
त्रिसन्ध्यमेकसन्ध्यं वा मुच्यते सर्वसङ्कटात् ॥७७॥
पठनं कवचस्यास्य पुत्रधनविवर्धनम् ।
भीतिविनाशनञ्चैव त्रिषु लोकेषु कीर्तितम् ॥७८॥
भूर्जपत्रे समालिख्य रोचनाकुङ्कुमेन तु ।
धारणाद्गलदेशे च सर्वसिद्धिर्भविष्यति ॥७९॥
अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ।
मोक्षार्थी मोक्षमाप्नोति कवचस्य प्रसादतः ॥८०॥

गर्भिणी लभते पुत्रं वन्ध्या च गर्भिणी भवेत् ।
धारयेद्यदि कण्ठे च अथवा वामबाहुके ॥८१॥
यः पठेन्नियतो भक्त्या स एव विष्णुवद्भवेत् ।
मृत्युव्याधिभयं तस्य नास्ति किञ्चिन्महीतले ॥८२॥
पठेद्वा पाठयेद्वापि शृणुयाच्छ्रावयेदपि ।
सर्वपापविमुक्तस्तु लभते परमां गतिम् ॥८३॥
विपदि सङ्कटे घोरे तथा च गहने वने ।
राजद्वारे च नौकायां तथा च रणमध्यतः ।
पठनाद्धारणाद्यस्य जयमाप्नोति निश्चितम् ॥८४॥
अपुत्रा च तथा वन्ध्या त्रिपक्षं शृणुयादपि ।
सुपुत्रं लभते सा तु दीर्घायुष्यं यशस्विनम् ॥८५॥
शृणुयाद्यः शुद्धबुद्ध्या द्वौ मासौ विप्रवक्रतः ।
सर्वान्कामानवाप्नोति सर्वबन्धाद्विमुच्यते ॥८६॥
मृतवत्सा जीववत्सा त्रिमासं शृणुयाद्यदि ।
रोगी रोगाद्विमुच्येत पठनान्मासमध्यतः ॥८७॥
लिखित्वा भूर्जपत्रे च ह्यथवा ताडपत्रके ।
स्थापयेन्नियतं गेहे नाग्निचौरभयं क्वचित् ॥८८॥
शृणुयाद्धारयेद्वापि पठेद्वा पाठयेदपि ।
यः पुमान्सततं तस्मिन्प्रसन्ना सर्व देवताः ॥८९॥
बहुना किमिहोक्तेन सर्वजीवेश्वरेश्वरी ।
आद्या शक्तिः सदा लक्ष्मीर्भक्तानुग्रहकारिणी ।
धारके पाठके चैव निश्चला निवसेद् ध्रुवम् ॥९०॥
॥इति श्रीकमला स्तोत्रम् सम्पूर्णम् ॥

# ॥श्री लक्ष्मी सहस्रनामस्तोत्रम् ॥

श्रीस्कन्दपुराणे सनत्कुमारसंहितायाम् ।
श्रीगणेशाय नमः ।
नाम्नां साष्टसहस्रञ्च ब्रूहि गार्ग्य महामते ।
महालक्ष्म्या महादेव्या भुक्तिमुक्त्यर्थसिद्धये ॥१॥
गार्ग्य उवाच
सनत्कुमारमासीनं द्वादशादित्यसन्निभम् ।
अपृच्छन्योगिनो भक्त्या योगिनामर्थसिद्धये ॥२॥
सर्वलौकिककर्मभ्यो विमुक्तानां हिताय वै ।
भुक्तिमुक्तिप्रदं जप्यमनुब्रूही दयानिधे ॥३॥
सनत्कुमार भगवन्सर्वज्ञोऽसि विशेषतः ।
आस्तिक्यसिद्धये नृणां क्षिप्रधर्मार्थसाधनम् ॥४॥
खिद्यन्ति मानवास्सर्वे धनाभावेन केवलम् ।
सिद्ध्यन्ति धनिनोऽन्यस्य नैव धर्मार्थकामनाः ॥५॥
दारिद्र्यध्वंसिनी नाम केन विद्या प्रकीर्तिता ।
केन वा ब्रह्मविद्याऽपि केन मृत्युविनाशिनी ॥६॥
सर्वासां सारभूतैका विद्यानां केन कीर्तिता ।
प्रत्यक्षसिद्धिदा ब्रह्मन् तामाचक्ष्व दयानिधे ॥७॥
सनत्कुमार उवाच-
साधु पृष्टं महाभागास्सर्वलोकहितैषिणः ।
महतामेष धर्मश्च नान्येषामिति मे मतिः ॥८॥
ब्रह्मविष्णुमहादेवमहेन्द्रादिमहात्मभिः ।
सम्प्रोक्तं कथयाम्यद्य लक्ष्मीनामसहस्रकम् ॥९॥
यस्योच्चारणमात्रेण दारिद्र्यान्मुच्यते नरः ।
किं पुनस्तज्जपाज्जापी सर्वेष्टार्थानवाप्नुयात् ॥१०॥
अस्य श्रीलक्ष्मीदिव्यसहस्रनामस्तोत्रमहामन्त्रस्य
आनन्दकर्दम चिक्लीतेन्दिरासुतादयो
महात्मानो महर्षयः अनुष्टुप्छन्दः ।
विष्णुमाया शक्तिः महालक्ष्मीः परादेवता ।
श्रीमहालक्ष्मीप्रसादद्वारा सर्वेष्टार्थसिद्ध्यर्थे जपे विनियोगः ।
श्रीमित्यादि षडङ्गन्यासः ।
ध्यानम्-
पद्मनाभप्रियां देवीं पद्माक्षीं पद्मवासिनीम् ।
पद्मवक्त्रां पद्महस्तां वन्दे पद्मामहर्निशम् ॥१॥

पूर्णेन्दुवदनां दिव्यरत्नाभरणभूषिताम् ।
वरदाभयहस्ताढ्यां ध्यायेच्चन्द्रसहोदरीम् ॥२॥
इच्छारूपां भगवतस्सच्चिदानन्दरूपिणीम् ।
सर्वज्ञां सर्वजननीं विष्णुवक्षस्स्थलालयाम् ॥३॥
दयालुमनिशं ध्यायेत्सुखसिद्धिस्वरूपिणीम् ।
यथोपदेशं जपित्वा, यथाक्रमं देव्यै समर्प्य,
ततश्शाम्भवीमुद्रया लक्ष्मीमनुसन्धाय, नामसहस्रं जपेत् ।
नित्यागतानन्तनित्या नन्दिनी जनरञ्जनी।
नित्यप्रकाशिनी चैव स्वप्रकाशस्वरूपिणी ॥१॥
महालक्ष्मीर्महाकाली महाकन्या सरस्वती ।
भोगवैभवसन्धात्री भक्तानुग्रहकारिणी ॥२॥
ईशावास्या महामाया महादेवी महेश्वरी ।
हृल्लेखा परमा शक्तिर्मातृकाबीजरूपिणी ॥३॥
नित्यानन्दा नित्यबोधा नादिनी जनमोदिनी ।
सत्यप्रत्ययनी चैव स्वप्रकाशात्मरूपिणी ॥४॥
त्रिपुरा भैरवी विद्या हंसा वागीश्वरी शिवा ।
वाग्देवी च महारात्रिः कालरात्रिस्त्रिलोचना ॥५॥
भद्रकाली कराली च महाकाली तिलोत्तमा ।
काली करालवक्त्रान्ता कामाक्षी कामदा शुभा ॥६॥
चण्डिका चण्डरूपेशा चामुण्डा चक्रधारिणी ।
त्रैलोक्यजयिनी देवी त्रैलोक्यविजयोत्तमा ॥७॥
सिद्धलक्ष्मीः क्रियालक्ष्मीर्मोक्षलक्ष्मीः प्रसादिनी ।
उमा भगवती दुर्गा चान्द्री दाक्षायणी शिवा ॥८॥
प्रत्यङ्गिरा धरावेला लोकमाता हरिप्रिया ।
पार्वती परमा देवी ब्रह्मविद्याप्रदायिनी ॥९॥
अरूपा बहुरूपा च विरूपा विश्वरूपिणी ।
पञ्चभूतात्मिका वाणी पञ्चभूतात्मिका परा ॥१०॥
काली मा पञ्चिका वाग्मी हविःप्रत्यधिदेवता ।
देवमाता सुरेशाना देवगर्भाऽम्बिका धृतिः ॥११॥
सङ्ख्या जातिः क्रियाशक्तिः प्रकृतिर्मोहिनी मही ।
यज्ञविद्या महाविद्या गुह्यविद्या विभावरी ॥१२॥
ज्योतिष्मती महामाता सर्वमन्त्रफलप्रदा ।
दारिद्र्यध्वंसिनी देवी हृदयग्रन्थिभेदिनी ॥१३॥
सहस्रादित्यसङ्काशा चन्द्रिका चन्द्ररूपिणी ।
गायत्री सोमसम्भूतिस्सावित्री प्रणवात्मिका ॥१४॥
शाङ्करी वैष्णवी ब्राह्मी सर्वदेवनमस्कृता ।

सेव्यदुर्गा कुबेराक्षी करवीरनिवासिनी ॥१५॥
जया च विजया चैव जयन्ती चाऽपराजिता ।
कुब्जिका कालिका शास्त्री वीणापुस्तकधारिणी ॥१६॥
सर्वज्ञशक्तिश्श्रीशक्तिर्ब्रह्मविष्णुशिवात्मिका ।
इडापिङ्गलिकामध्यमृणालीतन्तुरूपिणी ॥१७॥
यज्ञेशानी प्रथा दीक्षा दक्षिणा सर्वमोहिनी ।
अष्टाङ्गयोगिनी देवी निर्बीजध्यानगोचरा ॥१८॥
सर्वतीर्थस्थिता शुद्धा सर्वपर्वतवासिनी ।
वेदशास्त्रप्रमा देवी षडङ्गादिपदक्रमा ॥१९॥
शिवा धात्री शुभानन्दा यज्ञकर्मस्वरूपिणी ।
व्रतिनी मेनका देवी ब्रह्माणी ब्रह्मचारिणी ॥२०॥
एकाक्षरपरा तारा भवबन्धविनाशिनी ।
विश्वम्भरा धराधारा निराधाराऽधिकस्वरा ॥२१॥
राका कुहूरमावास्या पूर्णिमाऽनुमतिर्द्युतिः ।
सिनीवाली शिवाऽवश्या वैश्वदेवी पिशङ्गिला ॥२२॥
पिप्पला च विशालाक्षी रक्षोघ्नी वृष्टिकारिणी ।
दुष्टविद्राविणी देवी सर्वोपद्रवनाशिनी ॥२३॥
शारदा शरसन्धाना सर्वशस्त्रस्वरूपिणी ।
युद्धमध्यस्थिता देवी सर्वभूतप्रभञ्जनी ॥२४॥
अयुद्धा युद्धरूपा च शान्ता शान्तिस्वरूपिणी ।
गङ्गा सरस्वतीवेणीयमुनानर्मदापगा ॥२५॥
समुद्रवसनावासा ब्रह्माण्डश्रोणिमेखला ।
पञ्चवक्त्रा दशभुजा शुद्धस्फटिकसन्निभा ॥२६॥
रक्ता कृष्णा सिता पीता सर्ववर्णा निरीश्वरी ।
कालिका चक्रिका देवी सत्या तु वटुकास्थिता ॥२७॥
तरुणी वारुणी नारी ज्येष्ठादेवी सुरेश्वरी ।
विश्वम्भराधरा कर्त्री गलार्गलविभञ्जनी ॥२८॥
सन्ध्यारात्रिर्दिवाज्योत्स्ना कलाकाष्ठा निमेषिका ।
उर्वी कात्यायनी शुभ्रा संसारार्णवतारिणी ॥२९॥
कपिला कीलिकाऽका मल्लिकानवमल्लिका ।
देविका नन्दिका शान्ता भञ्जिका भयभञ्जिका ॥३०॥
कौशिकी वैदिकी देवी सौरी रूपाधिकाऽतिभा ।
दिग्वस्त्रा नववस्त्रा च कन्यका कमलोद्भवा ॥३१॥
श्रीस्सौम्यलक्षणाऽतीतदुर्गा सूत्रप्रबोधिका ।
श्रद्धा मेधा कृतिः प्रज्ञा धारणा कान्तिरेव च ॥३२॥
श्रुतिः स्मृतिर्धृतिर्धन्या भूतिरिष्टिर्मनीषिणी ।
विरक्तिर्व्यापिनी माया सर्वमायाप्रभञ्जनी ॥३३॥
माहेन्द्री मन्त्रिणी सिंही चेन्द्रजालस्वरूपिणी ।
अवस्थात्रयनिर्मुक्ता गुणत्रयविवर्जिता ॥३४॥
ईषणात्रयनिर्मुक्ता सर्वरोगविवर्जिता ।
योगिध्यानान्तगम्या च योगध्यानपरायणा ॥३५॥
त्रयीशिखा विशेषज्ञा वेदान्तज्ञानरूपिणी ।
भारती कमला भाषा पद्मा पद्मवती कृतिः ॥३६॥
गौतमी गोमती गौरी ईशाना हंसवाहनी ।
नारायणी प्रभाधारा जाह्नवी शङ्करात्मजा ॥३७॥
चित्रघण्टा सुनन्दा श्रीर्मानवी मनुसम्भवा ।
स्तम्भिनी क्षोभिणी मारी भ्रामिणी शत्रुमारिणी ॥३८॥
मोहिनी द्वेषिणी वीरा अघोरा रुद्ररूपिणी ।
रुद्रैकादशिनी पुण्या कल्याणी लाभकारिणी ॥३९॥
देवदुर्गा महादुर्गा स्वप्नदुर्गाऽष्टभैरवी ।
सूर्यचन्द्राग्निरूपा च ग्रहनक्षत्ररूपिणी ॥४०॥
बिन्दुनादकलातीता बिन्दुनादकलात्मिका ।
दशवायुजयाकारा कलाषोडशसंयुता ॥४१॥
काश्यपी कमलादेवी नादचक्रनिवासिनी ।
मृडाधारा स्थिरा गुह्या देविका चक्ररूपिणी ॥४२॥
अविद्या शार्वरी भुञ्जा जम्भासुरनिबर्हिणी ।
श्रीकाया श्रीकला शुभ्रा कर्मनिर्मूलकारिणी ॥४३॥
आदिलक्ष्मीर्गुणाधारा पञ्चब्रह्मात्मिका परा ।
श्रुतिर्ब्रह्ममुखावासा सर्वसम्पत्तिरूपिणी ॥४४॥
मृतसञ्जीविनी मैत्री कामिनी कामवर्जिता ।
निर्वाणमार्गदा देवी हंसिनी काशिका क्षमा ॥४५॥
सपर्या गुणिनी भिन्ना निर्गुणा खण्डिताशुभा ।
स्वामिनी वेदिनी शक्या शाम्बरी चक्रधारिणी ॥४६॥
दण्डिनी मुण्डिनी व्याघ्री शिखिनी सोमसंहतिः ।
चिन्तामणिश्चिदानन्दा पञ्चबाणाग्रबोधिनी ॥४७॥
बाणश्रेणिस्सहस्राक्षी सहस्रभुजपादुका ।
सन्ध्यावलिस्त्रिसन्ध्याख्या ब्रह्माण्डमणिभूषणा ॥४८॥
वासवी वारुणीसेना कुलिका मन्त्ररञ्जनी ।
जितप्राणस्वरूपा च कान्ता काम्यवरप्रदा ॥४९॥
मन्त्रब्राह्मणविद्यार्था नादरूपा हविष्मती ।
आथर्वणी श्रुतिशून्या कल्पनावर्जिता सती ॥५०॥
सत्ताजातिः प्रमाऽमेयाऽप्रमितिः प्राणदा गतिः ।
अवर्णा पञ्चवर्णा च सर्वदा भुवनेश्वरी ॥५१॥

त्रैलोक्यमोहिनी विद्या सर्वभर्त्री क्षराऽक्षरा ।
हिरण्यवर्णा हरिणी सर्वोपद्रवनाशिनी ॥५२॥
कैवल्यपदवीरेखा सूर्यमण्डलसंस्थिता ।
सोममण्डलमध्यस्था वह्निमण्डलसंस्थिता ॥५३॥
वायुमण्डलमध्यस्था व्योममण्डलसंस्थिता ।
चक्रिका चक्रमध्यस्था चक्रमार्गप्रवर्तिनी ॥५४॥
कोकिलाकुलचक्रेशा पक्षतिः पंक्तिपावनी ।
सर्वसिद्धान्तमार्गस्था षड्वर्णावरवर्जिता ॥५५॥
शररुद्रहरा हन्त्री सर्वसंहारकारिणी ।
पुरुषा पौरुषी तुष्टिस्सर्वतन्त्रप्रसूतिका ॥५६॥
अर्धनारीश्वरी देवी सर्वविद्याप्रदायिनी ।
भार्गवी याजुषीविद्या सर्वोपनिषदास्थिता ॥५७॥
व्योमकेशाखिलप्राणा पञ्चकोशविलक्षणा ।
पञ्चकोशात्मिका प्रत्यक्पञ्चब्रह्मात्मिका शिवा ॥५८॥
जगज्जराजनित्री च पञ्चकर्मप्रसूतिका ।
वाग्देव्याभरणाकारा सर्वकाम्यस्थितस्थितिः ॥५९॥
अष्टादशचतुष्षष्टिपीठिका विद्यया युता ।
कालिकाकर्षणश्यामा यक्षिणी किन्नरेश्वरी ॥६०॥
केतकी मल्लिकाशोका वाराही धरणी ध्रुवा ।
नारसिंही महोग्रास्या भक्तानामार्तिनाशिनी ॥६१॥
अन्तर्बला स्थिरा लक्ष्मीर्जरामरणनाशिनी ।
श्रीरञ्जिता महाकाया सोमसूर्याग्निलोचना ॥६२॥
अदितिर्देवमाता च अष्टपुत्राऽष्टयोगिनी ।
अष्टप्रकृतिरष्टाष्टविभ्राजद्विकृताकृतिः ॥६३॥
दुर्भिक्षध्वंसिनी देवी सीता सत्या च रुक्मिणी ।
ख्यातिजा भार्गवी देवी देवयोनिस्तपस्विनी ॥६४॥
शाकम्भरी महाशोणा गरुडोपरिसंस्थिता ।
सिंहगा व्याघ्रगा देवी वायुगा च महाद्रिगा ॥६५॥
अकारादिक्षकारान्ता सर्वविद्याधिदेवता ।
मन्त्रव्याख्याननिपुणा ज्योतिश्शास्त्रैकलोचना ॥६६॥
इडापिङ्गलिकामध्यासुषुम्ना ग्रन्थिभेदिनी ।
कालचक्राश्रयोपेता कालचक्रस्वरूपिणी ॥६७॥

वैशारदी मतिश्श्रेष्ठा वरिष्ठा सर्वदीपिका ।
वैनायकी वरारोहा श्रोणिवेला बहिर्वलिः ॥६८॥
जम्भिनी जृम्भिणी जृम्भकारिणी गणकारिका ।
शरणी चक्रिकाऽनन्ता सर्वव्याधिचिकित्सकी ॥६९॥
देवकी देवसङ्काशा वारिधिः करुणाकरा ।
शर्वरी सर्वसम्पन्ना सर्वपापप्रभञ्जिनी ॥७०॥
एकमात्रा द्विमात्रा च त्रिमात्रा च तथापरा ।
अर्धमात्रा परा सूक्ष्मा सूक्ष्मार्थाऽर्थपराऽपरा ॥७१॥
एकवीरा विशेषाख्या षष्ठीदेवी मनस्विनी ।
नैष्कर्म्या निष्कलालोका ज्ञानकर्माधिका गुणा ॥७२॥
सबन्ध्वानन्दसन्दोहा व्योमाकाराऽनिरूपिता ।
गद्यपद्यात्मिका वाणी सर्वालङ्कारसंयुता ॥७३॥
साधुबन्धपदन्यासा सर्वौको घटिकावलिः ।
षट्कर्मा कर्कशाकारा सर्वकर्मविवर्जिता ॥७४॥
आदित्यवर्णा चापर्णा कामिनी वररूपिणी ।
ब्रह्माणी ब्रह्मसन्ताना वेदवागीश्वरी शिवा ॥७५॥
पुराणन्यायमीमांसाधर्मशास्त्रागमश्रुता ।
सद्योवेदवती सर्वा हंसी विद्याधिदेवता ॥७६॥
विश्वेश्वरी जगद्धात्री विश्वनिर्माणकारिणी ।
वैदिकी वेदरूपा च कालिका कालरूपिणी ॥७७॥
नारायणी महादेवी सर्वतत्त्वप्रवर्तिनी ।
हिरण्यवर्णरूपा च हिरण्यपदसम्भवा ॥७८॥
कैवल्यपदवी पुण्या कैवल्यज्ञानलक्षिता ।
ब्रह्मसम्पत्तिरूपा च ब्रह्मसम्पत्तिकारिणी ॥७९॥
वारुणी वारुणाराध्या सर्वकर्मप्रवर्तिनी ।
एकाक्षरपराऽऽयुक्ता सर्वदारिद्र्यभञ्जिनी ॥८०॥
पाशांकुशान्विता दिव्या वीणाव्याख्याक्षसूत्रभृत् ।
एकमूर्तिस्त्रयीमूर्तिर्मधुकैटभभञ्जिनी ॥८१॥
सांख्या सांख्यवती ज्वाला ज्वलन्ती कामरूपिणी ।
जाग्रन्ती सर्वसम्पत्तिस्सुषुप्तान्वेष्टदायिनी ॥८२॥
कपालिनी महादंष्ट्रा भ्रुकुटी कुटिलानना ।
सर्वावासा सुवासा च बृहत्यष्टिश्च शक्वरी ॥८३॥

छन्दोगणप्रतिष्ठा च कल्माषी करुणात्मिका ।
चक्षुष्मती महाघोषा खड्गचर्मधराऽशनिः ॥८४॥
शिल्पवैचित्र्यविद्योता सर्वतोभद्रवासिनी ।
अचिन्त्यलक्षणाकारा सूत्रभाष्यनिबन्धना ॥८५॥
सर्ववेदार्थसम्पत्तिस्सर्वशास्त्रार्थमातृका ।
अकारादिक्षकारान्तसर्ववर्णकृतस्थला ॥८६॥
सर्वलक्ष्मीस्सदानन्दा सारविद्या सदाशिवा ।
सर्वज्ञा सर्वशक्तिश्च खेचरीरूपगोच्छ्रिता ॥८७॥
अणिमादिगुणोपेता परा काष्ठा परा गतिः ।
हंसयुक्तविमानस्था हंसारूढा शशिप्रभा ॥८८॥
भवानी वासनाशक्तिराकृतिस्थाखिलाऽखिला ।
तन्त्रहेतुर्विचित्राङ्गी व्योमगङ्गाविनोदिनी ॥८९॥
वर्षा च वार्षिका चैव ऋग्यजुस्सामरूपिणी ।
महानदीनदीपुण्याऽगण्यपुण्यगुणक्रिया ॥९०॥
समाधिगतलभ्यार्था श्रोतव्या स्वप्रिया घृणा ।
नामाक्षरपरा देवी उपसर्गनखाञ्चिता ॥९१॥
निपातोरुद्वयीजङ्घा मातृका मन्त्ररूपिणी ।
आसीना च शयाना च तिष्ठन्ती धावनाधिका ॥९२॥
लक्ष्यलक्षणयोगाढ्या ताद्रूप्यगणनाकृतिः ।
सैकरूपा नैकरूपा सेन्दुरूपा तदाकृतिः ॥९३॥
समासतद्धिताकारा विभक्तिवचनात्मिका ।
स्वाहाकारा स्वधाकारा श्रीपत्यर्धाङ्गनन्दिनी ॥९४॥
गम्भीरा गहना गुह्या योनिलिङ्गार्धधारिणी ।
शेषवासुकिसंसेव्या चषाला वरवर्णिनी ॥९५॥
कारुण्याकारसम्पत्तिः कीलकृन्मन्त्रकीलिका ।
शक्तिबीजात्मिका सर्वमन्त्रेष्टाक्षयकामना ॥९६॥
आग्नेयी पार्थिवा आप्या वायव्या व्योमकेतना ।
सत्यज्ञानात्मिकाऽऽनन्दा ब्राह्मी ब्रह्म सनातनी ॥९७॥
अविद्यावासना मायाप्रकृतिस्सर्वमोहिनी ।
शक्तिर्धारणशक्तिश्च चिदचिच्छक्तियोगिनी ॥९८॥
वक्त्रारुणा महामाया मरीचिर्मदमर्दिनी ।
विराड् स्वाहा स्वधा शुद्धा नीरूपास्तिस्सुभक्तिगा ॥९९॥

निरूपिताद्वयीविद्या नित्यानित्यस्वरूपिणी ।
वैराजमार्गसञ्चारा सर्वसत्पथदर्शिनी ॥१००॥
जालन्धरी मृडानी च भवानी भवभञ्जनी ।
त्रैकालिकज्ञानतन्तुस्त्रिकालज्ञानदायिनी ॥१०१॥
नादातीता स्मृतिः प्रज्ञा धात्रीरूपा त्रिपुष्करा ।
पराजिताविधानज्ञा विशेषितगुणात्मिका ॥१०२॥
हिरण्यकेशिनी हेमब्रह्मसूत्रविचक्षणा ।
असंख्येयपरार्धान्तस्वरव्यञ्जनवैखरी ॥१०३॥
मधुजिह्वा मधुमती मधुमासोदया मधुः ।
माधवी च महाभागा मेघगम्भीरनिस्वना ॥१०४॥
ब्रह्मविष्णुमहेशादिज्ञातव्यार्थविशेषगा ।
नाभौ वह्निशिखाकारा ललाटे चन्द्रसन्निभा ॥१०५॥
भ्रूमध्ये भास्कराकारा सर्वताराकृतिर्हृदि ।
कृत्तिकादिभरण्यन्तनक्षत्रेष्ट्यार्चितोदया ॥१०६॥
ग्रहविद्यात्मिका ज्योतिर्ज्योतिर्विन्मतिजीविका ।
ब्रह्माण्डगर्भिणी बाला सप्तावरणदेवता ॥१०७॥
वैराजोत्तमसाम्राज्या कुमारकुशलोदया ।
बगला भ्रमराम्बा च शिवदूती शिवात्मिका ॥१०८॥
मेरुविन्ध्यादिसंस्थाना काश्मीरपुरवासिनी ।
योगनिद्रा महानिद्रा विनिद्रा राक्षसाश्रिता ॥१०९॥
सुवर्णदा महागङ्गा पञ्चाख्या पञ्चसंहतिः ।
सुप्रजाता सुवीरा च सुपोषा सुपतिश्शिवा ॥११०॥
सुगृहा रक्तबीजान्ता हतकन्दर्पजीविका ।
समुद्रव्योममध्यस्था समबिन्दुसमाश्रया ॥१११॥
सौभाग्यरसजीवातुस्सारासारविवेकदृक् ।
त्रिवल्यादिसुपुष्टाङ्गा भारती भरताश्रिता ॥११२॥
नादब्रह्ममयीविद्या ज्ञानब्रह्ममयीपरा ।
ब्रह्मनाडी निरुक्तिश्च ब्रह्मकैवल्यसाधनम् ॥११३॥
कालिकेयमहोदारवीर्यविक्रमरूपिणी ।
वडबाग्निशिखावक्त्रा महाकबलतर्पणा ॥११४॥
महाभूता महादर्पा महासारा महाक्रतुः ।
पञ्जभूतमहाग्रासा पञ्चभूताधिदेवता ॥११५॥

सर्वप्रमाणा सम्पत्तिस्सर्वरोगप्रतिक्रिया ।
ब्रह्माण्डान्तर्बहिर्व्याप्ता विष्णुवक्षोविभूषणी ॥११६॥
शाङ्करी विधिवक्त्रस्था प्रवरा वरहेतुकी ।
हेममाला शिखामाला त्रिशिखा पञ्चमोचना ॥११७॥
सर्वागमसदाचारमर्यादा यातुभञ्जनी ।
पुण्यश्लोकप्रबन्धाढ्या सर्वान्तर्यामिरूपिणी ॥११८॥
सामगानसमाराध्या श्रोत्रकर्णरसायनम् ।
जीवलोकैकजीवातुर्भद्रोदारविलोकना ॥११९॥
तटित्कोटिलसत्कान्तिस्तरुणी हरिसुन्दरी ।
मीननेत्रा च सेन्द्राक्षी विशालाक्षी सुमङ्गला ॥१२०॥
सर्वमङ्गलसम्पन्ना साक्षान्मङ्गलदेवता ।
देहहृद्दीपिका दीप्तिर्जिह्मपापप्रणाशिनी ॥१२१॥
अर्धचन्द्रोल्लसद्दंष्ट्रा यज्ञवाटीविलासिनी ।
महादुर्गा महोत्साहा महादेवबलोदया ॥१२२॥
डाकिनीड्या शाकिनीड्या साकिनीड्या समस्तजुट् ।
निरङ्कुशा नाकिवन्द्या षडाधाराधिदेवता ॥१२३॥
भुवनज्ञानिनिश्श्रेणी भुवनाकारवल्लरी ।
शाश्वती शाश्वताकारा लोकानुग्रहकारिणी ॥१२४॥
सारसी मानसी हंसी हंसलोकप्रदायिनी ।
चिन्मुद्रालङ्कृतकरा कोटिसूर्यसमप्रभा ॥१२५॥
सुखप्राणिशिरोरेखा सदद‍ृष्टप्रदायिनी ।
सर्वसाङ्कर्यदोषघ्नी ग्रहोपद्रवनाशिनी ॥१२६॥
क्षुद्रजन्तुभयघ्नी च विषरोगादिभञ्जनी ।
सदाशान्ता सदाशुद्धा गृहच्छिद्रनिवारिणी ॥१२७॥
कलिदोषप्रशमनी कोलाहलपुरस्स्थिता ।
गौरी लाक्षणकी मुख्या जघन्याकृतिवर्जिता ॥१२८॥
माया विद्या मूलभूता वासवी विष्णुचेतना ।
वादिनी वसुरूपा च वसुरत्नपरिच्छदा ॥१२९॥
छान्दसी चन्द्रहृदया मन्त्रस्वच्छन्दभैरवी ।
वनमाला वैजयन्ती पञ्चदिव्यायुधात्मिका ॥१३०॥

पीताम्बरमयी चञ्चत्कौस्तुभा हरिकामिनी ।
नित्या तथ्या रमा रामा रमणी मृत्युभञ्जनी ॥१३१॥
ज्येष्ठा काष्ठा धनिष्ठान्ता शराङ्गी निर्गुणप्रिया ।
मैत्रेया मित्रविन्दा च शेष्यशेषकलाशया ॥१३२॥
वाराणसीवासरता चार्यावर्तजनस्तुता ।
जगदुत्पत्तिसंस्थानसंहारत्रयकारणम् ॥१३३॥
त्वमम्ब विष्णुसर्वस्वं नमस्तेऽस्तु महेश्वरि ।
नमस्ते सर्वलोकानां जनन्यै पुण्यमूर्तये ॥१३४॥
सिद्धलक्ष्मीर्महाकालि महलक्ष्मि नमोऽस्तु ते ।
सद्योजातादिपञ्चाग्निरूपा पञ्चकपञ्चकम् ॥१३५॥
यन्त्रलक्ष्मीर्भवत्यादिराद्याद्ये ते नमो नमः ।
सृष्ट्यादिकारणाकारवितते दोषवर्जिते ॥१३६॥
जगल्लक्ष्मीर्जगन्मातर्विष्णुपत्नि नमोऽस्तु ते ।
नवकोटिमहाशक्तिसमुपास्यपदाम्बुजे ॥१३७॥
कनत्सौवर्णरत्नाढ्ये सर्वाभरणभूषिते ।
अनन्तानित्यमहिषीप्रपञ्चेश्वरनायकि ॥१३८॥
अत्युच्छ्रितपदान्तस्थे परमव्योमनायकि ।
नाकपृष्ठगताराध्ये विष्णुलोकविलासिनि ॥१३९॥
वैकुण्ठराजमहिषि श्रीरङ्गनगराश्रिते ।
रङ्गनायकि भूपुत्रि कृष्णे वरदवल्लभे ॥१४०॥
कोटिब्रह्मादिसंसेव्ये कोटिरुद्रादिकीर्तिते ।
मातुलुङ्गमयं खेटं सौवर्णचषकं तथा ॥१४१॥
पद्मद्वयं पूर्णकुम्भं कीरञ्च वरदाभये ।
पाशमङ्कुशकं शङ्खं चक्रं शूलं कृपाणिकाम् ॥१४२॥
धनुर्बाणौ चाक्षमालां चिन्मुद्रामपि बिभ्रती ।
अष्टादशभुजे लक्ष्मीर्महाष्टादशपीठगे ॥१४३॥
भूमिनीलादिसंसेव्ये स्वामिचित्तानुवर्तिनि।
पद्मे पद्मालये पद्मि पूर्णकुम्भाभिषेचिते ॥१४४॥
इन्दिरेन्दिन्दिराभाक्षि क्षीरसागरकन्यके ।
भार्गवि त्वं स्वतन्त्रेच्छा वशीकृतजगत्पतिः ॥१४५॥

मङ्गलं मङ्गलानां त्वं देवतानां च देवता ।
त्वमुत्तमोत्तमानाञ्च त्वं श्रेयः परमामृतम् ॥१४६॥
धनधान्याभिवृद्धिश्च सार्वभौमसुखोच्छ्रया ।
आन्दोलिकादिसौभाग्यं मत्तेभादिमहोदयः ॥१४७॥
पुत्रपौत्राभिवृद्धिश्च विद्याभोगबलादिकम् ।
आयुरारोग्यसम्पत्तिरष्टैश्वर्यं त्वमेव हि ॥१४८॥
पदमेव विभूतिश्च सूक्ष्मासूक्ष्मतरागतिः ।
सदयापाङ्गसन्दत्तब्रह्मेन्द्रादिपदस्थितिः ॥१४९॥
अव्याहतमहाभाग्यं त्वमेवाक्षोभ्यविक्रमः ।
समन्वयश्च वेदानामविरोधस्त्वमेव हि ॥१५०॥
निःश्रेयसपदप्राप्तिसाधनं फलमेव च ।
श्रीमन्त्रराजराज्ञी च श्रीविद्या क्षेमकारिणी ॥१५१॥
श्रीबीजजपसन्तुष्टा ऐं ह्रीं श्रीं बीजपालिका ।
प्रपत्तिमार्गसुलभा विष्णुप्रथमकिङ्करी ॥१५२॥
क्लीङ्कारार्थसवित्री च सौमङ्गल्याधिदेवता ।
श्रीषोडशाक्षरीविद्या श्रीयन्त्रपुरवासिनी ॥१५३॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु ते ॥१५४॥
पुनः पुनर्नमस्तेऽस्तु साष्टाङ्गमयुतं पुनः ।

सनत्कुमार उवाच-

एवं स्तुता महालक्ष्मीर्ब्रह्मरुद्रादिभिस्सुरैः ।
नमद्भिरार्तैर्दीनैश्च निस्स्वत्वैर्भोगवर्जितैः ॥१॥
ज्येष्ठा जुष्टैश्च निश्श्रीकैस्संसारात्स्वपरायणैः ।
विष्णुपत्नी ददौ तेषां दर्शनं दृष्टितर्पणम् ॥२॥
शरत्पूर्णेन्दुकोट्याभधवलापाङ्गवीक्षणैः ।
सर्वात्सत्त्वसमाविष्टांश्चक्रे दृष्टा वरं ददौ ॥३॥

महालक्ष्मीरुवाच-

नाम्नां साष्टसहस्रं मे प्रमादाद्वापि यस्सकृत् ।
कीर्तयेत्तत्कुले सत्यं वसाम्याचन्द्रतारकम् ॥४॥
किं पुनर्नियमाज्जप्तुर्मदेकशरणस्य च ।
मातृवत्सानुकम्पाहं पोषकी स्यामहर्निशम् ॥५॥
मन्नाम स्तवतां लोके दुर्लभं नास्ति चिन्तितम् ।
मत्प्रसादेन सर्वेऽपि स्वस्वेष्टार्थमवाप्स्यथ ॥६॥
लुप्तवैष्णवधर्मस्य मद्व्रतेष्ववकीर्णिनः ।
भक्तिप्रपत्तिहीनस्य वन्द्यो नाम्नां जरापि मे ॥७॥
तस्मादवश्यं तैर्दोषैर्विहीनः पापवर्जितः ।
जपेत्साष्टसहस्रं मे नाम्नां प्रत्यहमादरात् ॥८॥
साक्षादलक्ष्मीपुत्रोऽपि दुर्भाग्योऽप्यलसोऽपि वा ।
अप्रयत्नोऽपि मूढोऽपि विकलः पतितोऽपि च ॥९॥
अवशात्प्राप्नुयाद्भाग्यं मत्प्रसादेन केवलम् ।
स्पृहेयमचिराद्देवाः वरदानाय जापिनः ॥१०॥
ददामि सर्वमिष्टार्थं लक्ष्मीति स्मरतां ध्रुवम् ।

सनत्कुमार उवाच-

इत्युक्त्वाऽन्तर्दधे लक्ष्मीर्वैष्णवी भगवत्कला ॥११॥
इष्टापूर्तं च सुकृतं भागधेयं च चिन्तितम् ।
स्वं स्वं स्थानं च भोगं च विजयं लेभिरे सुराः ॥१२॥
तदेतत् प्रवदाम्यद्य लक्ष्मीनामसहस्रकम् ।
योगिनः पठत क्षिप्रं चिन्तितार्थानवाप्स्यथ ॥१३॥

गार्ग्य उवाच-

सनत्कुमारोयोगीन्द्र इत्युक्त्वा स दयानिधिः ।
अनुगृह्य ययौ क्षिप्रं तांश्च द्वादशयोगिनः ॥१४॥
तस्मादेतद्रहस्यञ्च गोप्यं जप्यं प्रयत्नतः ।
अष्टम्यां च चतुर्दश्यां नवम्यां भृगुवासरे ॥१५॥
पौर्णमास्याममायां च पर्वकाले विशेषतः ।
जपेद्वा नित्यकार्येषु सर्वान्कामानवाप्नुयात् ॥१६॥
॥इति श्रीस्कन्दपुराणे सनत्कुमारसंहितायां
लक्ष्मीसहस्रनामस्तोत्रं सम्पूर्णम् ॥

# ॥ श्रीलक्ष्मी नरसिंह सुप्रभातस्तोत्रम् ॥

। श्री यादगिरि लक्ष्मीनृसिंह सुप्रभातम्
श्री वङ्गीपुरम् नरसिंहाचार्यरचित ।
कौसल्या सुप्रजा राम पूर्वा संध्या प्रवर्तते ।
उत्तिष्ठ नरशार्दूल! कर्तव्यं दैवमाह्निकम् ॥१॥
उत्तिष्ठोत्तिष्ठ गोविंद उत्तिष्ठ गरुडध्वज ।
उत्तिष्ठ कमलाकान्त त्रैलोक्यं मङ्गळं कुरु
॥२॥
यादाद्रिनाथशुभमन्दिरकल्पवल्लि
पद्मालये जननि पद्मभवादिवन्द्ये ।
भक्तार्तिभञ्जनि दयामयदिव्यरूपे
लक्ष्मीनृसिंहदयिते तव सुप्रभातम् ॥३॥
ज्वालानृसिंह करुणामय दिव्यमूर्ते
योगाभिनन्दन नृसिंह दयासमुद्र! ।
लक्ष्मीनृसिंह शरणागतपारिजात
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥४॥
श्रीरङ्गवेङ्कटमहीधरहस्तिशैल
श्री यादवाद्रिमुखसत्त्वनिकेतनानि ।
स्थानानि तेकिल वदन्ति परावरज्ञाः
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥५॥
ब्रह्मादयस्सुरवर मुनिपुङ्गवाश्च
त्वां सेवितुं विविधमङ्गळवस्तुहस्ताः ।
द्वारे वसन्ति नरसिंह भवाब्धिपोत
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥६॥
प्रह्लाद नारद पराशर पुण्डरीक
व्यासादिभक्तरसिका भवदीयसेवाम् ।
वाञ्छन्त्यनन्यहृदया करुणासमुद्र
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥७॥
त्वद्दास्यभोगरसिकाश्शठजिन्मुखार्याः
रामानुजादिमहनीयगुरुप्रधानाः ।
सेवार्थ मत्र भवदीयगृहाङ्गणस्थाः
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥८॥
भक्ता स्त्वदीयपदपङ्कजसक्तचित्ताः
काल्यं विधाय तवकन्दर मन्दिराग्रे ।
त्वद्दर्शनोत्सुकतया निबिडं श्रयन्ते
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥ ९॥
दिव्यावतारदशके नरसिंह ते तु
दिव्यावतारमहिमा नहि देवगम्यः ।
प्रह्लाददानवशिशोःकिल भक्तिगम्यः
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥१०॥
श्रीयादवाद्रिशिखरे त्वमहोबिलेऽपि
सिंहाचले च शुभमङ्गळशैलराजे ।
वेदाचलादि गिरि मूर्धसु सुस्थितोसि
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥ ११॥
काम्यार्थिनो वरदकल्पक कल्पकं त्वां
सेवार्थिनः स्सुजनसेव्यपदद्वयं त्वाम् ।
भक्त्या विनम्र शिरसा प्रणमन्ति सर्वे
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥१२॥
त्वन्नाममन्त्रपठनेन लुठन्ति पापाः
त्वन्नाममन्त्रपठनेन लुठन्ति दैत्याः ।
त्वन्नाममन्त्रपठनेन लुठन्तिरोगाः
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥१३॥
लक्ष्मीनृसिंह! जगदीश! सुरेश! विष्णो
जिष्णो! जनार्दन! परात्पर विश्वरूप ।
विश्वप्रभातकरणाय कृतावतार
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥१४॥
त्वन्नाममन्त्र पठनंकिलसुप्रभातं
अस्माकमस्तु तवचास्तु च सुप्रभातम् ।
अस्मत्समुद्धरणमेव विचित्रगाध
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥१५॥
त्वत् पूजका परिवृढा परिचारकाश्च
नित्यार्चनाय विधिवद्विहित स्वकृत्याः ।
यत्तस्त्वदीय शुभगह्वर मन्दिराग्रे
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥१६॥
प्राभातकीमुपचितिम् परिकल्पयन्तः
कुण्डाश्च पूर्णजलकुम्भमुपाहरन्तः ।
श्रीवैष्णवाः समुपयान्तिहरे! नृसिंह
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥१७॥
सूर्योऽभ्युदेति विकसन्ति सरोरुहाणि
नीलोत्पलानि हि भवन्ति निमीलितानि ।
प्राग्दिङ्मुखेरुणगभस्तिगणोऽभ्युदेति
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥१८॥
मन्दानिलस्सुर नदीकमलोदरेशु
मन्दंविगाह्य शुभसौरभ मादधानः ।
हर्षप्रकर्षमुपयाति च सेवितुं त्वां
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥१९॥
तारागणोवियति मज्जति सुप्रभाते
सूर्येणसाकमवलोकयितुं त्वदीयम् ।
श्रीसुप्रभातमवभासित सर्वलोकं
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥२०॥
पक्षिस्वनाश्चपरितःपरिसम्पतन्ति
कूजन्तिकोकिलगणाःकलकंठरावैः ।
वाचा विशुद्धकलयानुवदन्तिकीराः
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥२१॥
पल्लीषु वल्लवजनाःस्वगृहाङ्गणेषु
धेनूर्दुहन्ति विनिभान्ति विशेषदृष्ट्या ।
गोपालबाल इव भक्तहृदम्बुजेषु
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥२२॥
गाढांधकारपटलम् गगनंजहाति
मोहान्धकार इव सन्मनुजम् समस्तम् ।
रागोविराग इव संविशति प्रकामं
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥२३॥
निद्राजहाति हि जनान् सुमुनिं यथावत्
प्रज्ञाप्युदेति हि जनेषु मुनौयथावत् ।
सक्तिर्जनेषु हि यथा च मुनौविरक्तिः
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥२४॥
फुल्लानिपङ्कजवनानि विशुद्धसत्त्व
फुल्लानि सज्जनमनःकमलानि यद्वत् ।
भाश्शुद्धसत्वमिव भाति विदिक्षु दिक्षु
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥२५॥
ब्रह्मास्वयंसुरगणैस्सहलोकपालैः
धामप्रविश्य तव मण्डपगोपुराढ्यम् ।
पञ्चाङ्गशुद्धिमभिवर्णयति त्वदीयां
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥२६॥
विख्यातवैद्यजन वञ्चकरोगजाल
विख्यातवैद्य इति रोगनिपीडितास्त्वाम् ।
निश्चित्यधाम तव दूरत आपतन्ति
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥२७॥
भूतग्रहादि बलवत्तर तापयुक्ताः
बाणावतीमुख महोग्रपिशाच विद्धाः ।
स्नाताःप्रदक्षिणविधा वुपयान्तिनाथ
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥२८॥
सन्तानहीन वनितास्सरसि त्वदीये
स्नात्वाजलार्द्रवसनास्तव दर्शनाय ।
आयान्तिसन्ततिवरप्रद देवदेव
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥२९॥
यद्दुष्ट संहरणमुत्तमलोकरक्षा
दीक्षां व्यनक्ति तवरूप महोनृसिंह ।
तच्चात्र यादगिरिमूर्धनिसंविभाति
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥३०॥

प्रह्लाद पुण्यजनि पुण्यबलात्प्रतीतं
रूपं जनस्तवहरे निगमान्तवेद्यम् ।
प्रातःस्मरंस्तरति संस्मारणाम्बुराशिं
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥३१॥
श्रीसुप्रभातमिदमच्युतकैतवोक्त
मप्यच्युतं भवतुभक्तजनैकवेद्यम् ।
लक्ष्मीनृसिंह तव नामशुभप्रभावात्
यादाद्रिनाथ नृहरे! तव सुप्रभातम् ॥ ३२॥
इत्थं यादाद्रिनाथस्य सुप्रभात मतन्द्रिताः ।
येपठन्ति सदाभक्त्याते
नरास्सुखभागिनः॥३३॥
॥इति श्री लक्ष्मी नरसिंह सुप्रभातम् ॥

# श्रीलक्ष्मीनारायणस्तोत्रम्

अथ श्रीलक्ष्मीनारायणस्तोत्रम् ।
सत्यव्रतक्षेत्रललामभूतो बाहासरित्तीरविराजमानः ।
मखिप्रकृष्टोद्घरशाणिपालै नारायणो यत विभाति लक्ष्म्या ॥१॥
आत्रेयगोत्राम्बुधिपूर्णचन्द्रैः आचारशीलैरभितो वरिष्ठैः ।
आशास्यमानः परभक्तियुक्तैः नारायणो भाति सहैव लक्ष्म्या ॥२॥
श्रीवैष्णवाग्रेसरमाननीयाः आचार्यवर्या जगति प्रसिद्धाः ।
सत्सम्प्रदायावनबद्धदीक्षाः त्वया प्रदात्ता जगतां विभान्ति ॥३॥
भाग्यं जगत्यामुपवर्णनीयं त्वदीयसेवाफलमामनन्ति ।
अस्तोकदिव्याध्वरवेदिभोग्ये जानेऽग्रहारे तव भाग्यमेतत् ॥४॥
इष्टार्थसिद्ध्यै भवतोपदिष्टमिष्ट्यादिकं भूरि कृतं हि यत्र ।
यज्ञो हि नारायणनामरूपः त्वमत्र भासीति विभावये त्वाम् ॥५॥
आत्रेयगोत्रैकजनिप्रकृष्टाः द्विजा द्विजत्वं प्रतिपद्यमानाः ।
भूयस्तरां विष्णुपदे चरन्तः
विभान्ति तुष्टस्त्वमिहासि भूत्यै ॥६॥
नारायण त्वं रमया समेतः प्राचीं दिशं वीक्ष्य मुहुः प्रसन्नः ।
कुतो न जाने परमं रहस्यं
यूपोज्ज्वलं स्तम्भमवेक्षसे किम् ! ॥७॥
यज्ञस्य साक्षी स्थिर एव लोके यज्ञस्थली चापि विभाति सुस्था ।
ततोऽभिजातावसतोऽग्रहारः विश्वप्रसिद्धोऽप्यधुना त्वयैव ॥८॥
काञ्च्युत्तराचोत्तमतां प्रणीता यज्ञैर्हि सज्जैः किल यायजूकैः ।
अत्र्यन्ववायान्वयविद्वदग्र्यैः सुस्वध्वरैरध्वरवेदिदीप्रैः ॥९॥
श्रीवादिहंसाम्बुदसूरिवर्य वंशावतंसैः किल विप्रवर्यैः ।
श्रीश्रीनिवासाध्वरिभिः प्रतिष्ठां प्राप्तोऽग्रहारोद्घरशाणिपालै ॥१०॥
प्रतिष्ठितस्त्वं निजभूम्नि नित्यं प्रतिष्ठितस्त्वं परमाग्रहारे ।
पुनः प्रतिष्ठा भवतः प्रशस्या
चिराय नारायण ! सन्निधत्स्व ॥११॥

यमप्पयं प्राह्वयतिस्म हृष्टो वरप्रदो वारणशैलमूर्ध्नि ।
देवाधिराजोऽप्पयदीक्षितोऽसौ कूटस्थ एवाभवदत्रिगोत्रे ॥ १२॥
कल्याणकुल्या कमनीययूपः कार्श्यं कुतः प्राप न वेद्मि तत्त्वम् ।
क्षमस्व सर्वानपराधवर्गान्
ऋद्ध्यै समीक्षस्व सुधाकटाक्षात्॥१३॥
कल्याणकुल्यामृतवाहिनी स्तात् यूपः समुच्छ्रायमुपैतु भूयः ।
त्वदीयधामोज्ज्वलतामुपेयात् आराधनं ते नवतां प्रदद्यात् ॥१४॥
काञ्चीघटाम्बिवत्यभिधानभाजः श्रीवेंकटाचार्यमुखाः कवीन्द्राः ।
यत्सन्निधानात् अतुलां प्रतिष्ठां
संप्राप्य नारायण संविभासि ॥१५॥
दभ्रेतरे धामनि वर्धमानो दभ्रं परं धाम समाश्रितोऽसि ।
अदभ्रदृष्ट्या स्वयमेधमानः भद्राणि नारायण संविधेयाः ॥ १६॥
विधिप्रणीते सुभगेऽश्वमेधे समुद्भवन् श्यामलहव्यवाहः ।
अस्तोकभोग्याध्वरहव्यभोक्ता
नयत्यहो तान् स्वपुरं स्मदेवः॥१७॥
कलिः प्रदुष्टः कवयोऽपि नष्टाः कल्याणकुल्याप्यमृतेन हीना ।
जाताश्च दूरे सुखजीविकायै परन्तु नारायण सुस्थिरोऽसि ॥ १८॥
पूतोऽग्रहारो मखजालकृत्या पूता स्थली सत्पदरेणुपूर्णा ।
पूता वयं ग्रामसुनामधृत्या वसेम नारायण ते कटाक्षैः ॥ १९॥
श्रीसूक्तहोमेन कृतेन भक्त्या ग्रामस्समृद्धिं सकलामुपैतु ।
देवस्समाराधनसम्प्रहृष्टः अभीष्टदायी सततं विभातु ॥ २०॥
अत्र्यन्ववाये जनिमेत्य सेवा रतेन मावासरघूत्तमेन ।
भक्त्या कृतं स्तोत्रमिदं पठन्तः
लक्ष्मीकटाक्षेण विभान्तु लोके ॥२१॥
लक्ष्मी नारायणं देवं मन्दिरं नूतन निर्मितम् ।
रक्षितां यागशालां च दृष्ट्वा तुष्टिं भजेमहि ॥ २२॥

॥ इति श्रीनिवासराघवन् विरचितं
श्रीलक्ष्मीनारायणस्तोत्रम् सम्पूर्णम् ॥

# ॥ श्रीलक्ष्म्यष्टोत्तरशतनामावली ॥

वन्दे पद्मकरां प्रसन्नवदनां
सौभग्यदां भाग्यदां
हस्ताभ्यां अभयं प्रदां
मणिगणैर्नानाविधैर्भूषिताम् ।
भक्ताभीष्ट फलप्रदां हरिहर
ब्रह्मादिभिः सेवितां पार्श्वे
पङ्कजशङ्खपद्म निधिभिर्युक्तां
सदा शक्तिभिः ॥
सरसिजनिलये सरोजहस्ते
धवल तरांशुक
गन्धमाल्यशोभे।
भगवति हरिवल्लभे मनोज्ञे
त्रिभुवनभूतिकरि प्रसीद
मह्यम्॥

ॐ प्रकृत्यै नमः ।
ॐ विकृत्यै नमः ।
ॐ विद्यायै नमः ।
ॐ सर्वभूतहितप्रदायै नमः ।
ॐ श्रद्धायै नमः ।
ॐ विभूत्यै नमः ।
ॐ सुरभ्यै नमः ।
ॐ परमात्मिकायै नमः ।
ॐ वाचे नमः ।
ॐ पद्मालयायै नमः ।
ॐ पद्मायै नमः ।
ॐ शुचये नमः ।
ॐ स्वाहायै नमः ।
ॐ स्वधायै नमः ।
ॐ सुधायै नमः ।
ॐ धन्यायै नमः ।
ॐ हिरण्मय्यै नमः ।
ॐ लक्ष्म्यै नमः ।

ॐ नित्यपुष्टायै नमः ।
ॐ विभावर्यै नमः ।
ॐ अदित्यै नमः ।
ॐ दित्यै नमः ।
ॐ दीप्तायै नमः ।
ॐ वसुधायै नमः ।
ॐ वसुधारिण्यै नमः ।
ॐ कमलायै नमः ।
ॐ कान्तायै नमः ।
ॐ कामाक्ष्यै नमः ।
ॐ क्रोधसम्भवायै नमः ।
ॐ अनुग्रहप्रदायै नमः ।
ॐ बुद्धये नमः ।
ॐ अनघायै नमः ।
ॐ हरिवल्लभायै नमः ।
ॐ अशोकायै नमः ।
ॐ अमृतायै नमः ।
ॐ दीप्तायै नमः ।
ॐ लोकशोकविनाशिन्यै नमः।
ॐ धर्मनिलयायै नमः ।
ॐ करुणायै नमः ।
ॐ लोकमात्रे नमः ।
ॐ पद्मप्रियायै नमः ।
ॐ पद्महस्तायै नमः ।
ॐ पद्माक्ष्यै नमः ।
ॐ पद्मसुन्दर्यै नमः ।
ॐ पद्मोद्भवायै नमः ।
ॐ पद्ममुख्यै नमः ।
ॐ पद्मनाभप्रियायै नमः ।
ॐ रमायै नमः ।
ॐ पद्ममालाधरायै नमः ।

ॐ देव्यै नमः ।
ॐ पद्मिन्यै नमः ।
ॐ पद्मगन्धिन्यै नमः ।
ॐ पुण्यगन्धायै नमः ।
ॐ सुप्रसन्नायै नमः ।
ॐ प्रसादाभिमुख्यै नमः ।
ॐ प्रभायै नमः ।
ॐ चन्द्रवदनायै नमः ।
ॐ चन्द्रायै नमः ।
ॐ चन्द्रसहोदर्यै नमः ।
ॐ चतुर्भुजायै नमः ।
ॐ चन्द्ररूपायै नमः ।
ॐ इन्दिरायै नमः ।
ॐ इन्दुशीतलायै नमः ।
ॐ आह्लादजनन्यै नमः ।
ॐ पुष्टायै नमः ।
ॐ शिवायै नमः ।
ॐ शिवकर्यै नमः ।
ॐ सत्यै नमः ।
ॐ विमलायै नमः ।
ॐ विश्वजनन्यै नमः ।
ॐ तुष्टायै नमः ।
ॐ दारिद्र्यनाशिन्यै नमः ।
ॐ प्रीतिपुष्करिण्यै नमः ।
ॐ शान्तायै नमः ।
ॐ शुक्लमाल्याम्बरायै नमः ।
ॐ श्रियै नमः ।
ॐ भास्कर्यै नमः ।
ॐ बिल्वनिलयायै नमः ।
ॐ वरारोहायै नमः ।
ॐ यशस्विन्यै नमः ।
ॐ वसुन्धरायै नमः ।

ॐ उदाराङ्गायै नमः ।
ॐ हरिण्यै नमः ।
ॐ हेममालिन्यै नमः ।
ॐ धनधान्यकर्यै नमः ।
ॐ सिद्धये नमः ।
ॐ स्त्रैणसौम्यायै नमः ।
ॐ शुभप्रदाये नमः ।
ॐ नृपवेश्मगतानन्दायै नमः ।
ॐ वरलक्ष्म्यै नमः ।
ॐ वसुप्रदायै नमः ।
ॐ शुभायै नमः ।
ॐ हिरण्यप्राकारायै नमः ।
ॐ समुद्रतनयायै नमः ।
ॐ जयायै नमः ।
ॐ मङ्गळा देव्यै नमः ।
ॐ विष्णुवक्षस्स्थल स्थितायै नमः ।
ॐ विष्णुपत्न्यै नमः ।
ॐ प्रसन्नाक्ष्यै नमः ।
ॐ नारायणसमाश्रितायै नमः ।
ॐ दारिद्र्यध्वंसिन्यै नमः ।
ॐ देव्यै नमः ।
ॐ सर्वोपद्रव वारिण्यै नमः ।
ॐ नवदुर्गायै नमः ।
ॐ महाकाल्यै नमः ।
ॐ ब्रह्मा विष्णु शिवात्मिकायै नमः ।
ॐ त्रिकाल ज्ञानसम्पन्नायै नमः ।
ॐ भुवनेश्वर्यै नमः ।
॥ इति श्रीलक्ष्म्यष्टोत्तरशत नामावलिः ॥

# श्री लक्ष्मी सहस्त्रनामस्तोत्रम्

ध्यानम
भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा
शुभ्राभ्राभेभयुग्मद्वयकरधृतकुम्भाद्भिरासिच्यमाना ।
रक्तौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या
पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रियै नः ॥
स्तोत्रम्
श्रीः पद्मा प्रकृतिः सत्त्वा शान्ता चिच्छक्तिरव्यया ।
केवला निष्कला शुद्धा व्यापिनी व्योमविग्रहा ॥१॥
व्योमपद्मकृताधारा परा व्योमामृतोद्भवा ।
निर्व्योमा व्योममध्यस्था पञ्चव्योमपदाश्रिता ॥२॥
अच्युता व्योमनिलया परमानन्दरूपिणी ।
नित्यशुद्धा नित्यतृप्ता निर्विकारा निरीक्षणा ॥३॥
ज्ञानशक्तिः कर्तृशक्तिर्भोक्तृशक्तिः शिखावहा ।
स्नेहाभासा निरानन्दा विभूतिर्विमला चला ॥४॥
अनन्ता वैष्णवी व्यक्ता विश्वानन्दा विकाशिनी ।
शक्तिर्विभिन्नसर्वार्तिः समुद्रपरितोषिणी ॥५॥
मूर्तिः सनातनी हार्दी निस्तरङ्गा निरामया ।
ज्ञानज्ञेया ज्ञानगम्या ज्ञानज्ञेयविकाशिनी ॥६॥
स्वच्छन्दशक्तिर्गहना निष्कम्पार्चिः सुनिर्मला ।
स्वरूपा सर्वगा पारा बृंहिणी सुगुणोर्जिता ॥७॥
अकलङ्का निराधारा निःसंकल्पा निराश्रया ।
असंकीर्णा सुशान्ता च शाश्वती भासुरी स्थिरा ॥८॥
अनौपम्या निर्विकल्पा नियन्त्रा यन्त्रवाहिनी ।
अभेद्या भेदिनी भिन्ना भारती वैखरी खगा ॥९॥
अग्राह्या ग्राहिका गूढा गम्भीरा विश्वगोपिनी ।
अनिर्देश्याप्रतिहता निर्बीजा पावनी परा ॥१०॥
अप्रतर्क्या परिमिता भवभ्रान्तिविनाशिनी ।
एका द्विरूपा त्रिविधा असंख्याता सुरेश्वरी ॥११॥
सुप्रतिष्ठा महाधात्री स्थितिर्वृद्धिर्ध्रुवा गतिः ।
ईश्वरी महिमा ऋद्धिः प्रमोद उज्ज्वलोद्यमा ॥१२॥
अक्षया वर्धमाना च सुप्रकाशा विहङ्गमा ।
नीरजा जननी नित्या जया रोचिष्मती शुभा ॥१३॥
तपोनुदा च ज्वाला च सुदीप्तिश्चांशुमालिनी ।
अप्रमेया त्रिधा सूक्ष्मा परा निर्वाणदायिनी ॥१४॥
अवदाता सुशुद्धा च अमोघाख्या परम्परा ।
संधानकी शुद्धविद्या सर्वभूतमहेश्वरी ॥१५॥
लक्ष्मीस्तुष्टिर्महाधीरा शान्तिरापूरणेन वा ।
अनुग्रहाशक्तिराद्या जगज्ज्येष्ठा जगद्विधिः ॥१६॥
सत्या प्रह्वा क्रिया योग्या अपर्णा ह्लादिनी शिवा ।
सम्पूर्णा ह्लादिनी शुद्धा ज्योतिष्मत्यमृतावहा ॥१७॥
रजोवत्यर्कप्रतिभाऽऽकर्षिणी कर्षिणी रसा ।
परावसुमती देवा कान्तिः शान्तिर्मतिः कला ॥१८॥
कला कलङ्करहिता विशालोद्दीपनी रतिः ।
सम्बोधिनी हारिणी च प्रभावा भवभूतिदा ॥१९॥
अमृतस्यन्दिनी जीवा जननी खण्डिका स्थिरा ।
धूमा कलावती पूर्णा भासुरा सुमतीरसा ॥२०॥
शुद्धा ध्वनिः सृतिः सृष्टिर्विकृतिः कृष्टिरेव च ।
प्रापणी प्राणदा प्रह्वा विश्वा पाण्डुरवासिनी ॥२१॥
अवनिर्वज्रनलिका चित्रा ब्रह्माण्डवासिनी ।
अनन्तरूपानन्तात्मानन्तस्थानन्तसम्भवा ॥२२॥
महाशक्तिः प्राणशक्तिः प्राणदात्री रतिम्भरा ।
महासमूहा निखिला इच्छाधारा सुखावहा ॥२३॥
प्रत्यक्षलक्ष्मीर्निष्कम्पा प्ररोहाबुद्धिगोचरा ।
नानादेहा महावर्ता बहुदेहविकासिनी ॥२४॥
सहस्राणी प्रधाना च न्यायवस्तुप्रकाशिका ।
सर्वाभिलाषपूर्णेच्छा सर्वा सर्वार्थभाषिणी ॥२५॥
नानास्वरूपचिद्धात्री शब्दपूर्वा पुरातना ।
व्यक्ताव्यक्ता जीवकेशा सर्वेच्छापरिपूरिता ॥२६॥
संकल्पसिद्धा सांख्येया तत्त्वगर्भा धरावहा ।
भूतरूपा चित्स्वरूपा त्रिगुणा गुणगर्विता ॥२७॥
प्रजापतीश्वरी रौद्री सर्वाधारा सुखावहा ।
कल्याणवाहिका कल्या कलिकल्मषनाशिनी ॥२८॥
नीरूपोद्भिन्नसंताना सुयन्त्रा त्रिगुणालया ।
महामाया योगमाया महायोगेश्वरी प्रिया ॥२९॥
महास्त्री विमला कीर्तिर्जया लक्ष्मीर्निरञ्जना ।
प्रकृतिर्भगवन्माया शक्तिर्निद्रा यशस्करी ॥३०॥
चिन्ताबुद्धिर्यशःप्राज्ञाशान्तिराप्रीतिवर्धिनी ।
प्रद्युम्नमाता साध्वी च सुखसौभाग्यसिद्धिदा ॥३१॥
काष्ठा निष्ठा प्रतिष्ठा च ज्येष्ठा श्रेष्ठा जयावहा ।
सर्वातिशायिनी प्रीतिर्विश्वशक्तिर्महाबला ॥३२॥
वरिष्ठा विजया वीरा जयन्ती विजयप्रदा ।
हृद्गृहा गोपिनी गुह्या गणगन्धर्वसेविता ॥३३॥
योगीश्वरी योगमाया योगिनी योगसिद्धिदा ।
महायोगेश्वरवृता योगा योगेश्वरप्रिया ॥३४॥
ब्रह्मेन्द्ररुद्रनमिता सुरासुरवरप्रदा ।
त्रिवर्त्मगा त्रिलोकस्था त्रिविक्रमपदोद्भवा ॥३५॥
सुतारा तारिणी तारा दुर्गा संतारिणी परा ।
सुतारिणी तारयन्ती भूरितारेश्वरप्रभा ॥३६॥
गुह्याविद्या यज्ञविद्या महाविद्या सुशोभिता ।
अध्यात्मविद्याविघ्नेशी पद्मस्था परमेष्ठिनी ॥३७॥
आन्वीक्षिकी त्रयीवार्ता दण्डनीतिर्नयात्मिका ।
गौरी वागीश्वरी गोप्त्री गायत्री कमलोद्भवा ॥३८॥
विश्वम्भरा विश्वरूपा विश्वमाता वसुप्रदा ।
सिद्धिः स्वाहा स्वधा स्वस्ति सुधा सर्वार्थसाधिनी ॥३९॥
इच्छा सृष्टीर्द्युतिर्मूर्तिः कीर्तिः श्रद्धा दयामतिः ।
श्रुतिर्मेधा धृतिर्ह्रीः श्रीर्विद्या विबुधवन्दिता ॥४०॥

अनसूया घृणा नीतिर्निर्वृतिः कामधुक्करा ।
प्रतिज्ञा संततिर्भूतिर्द्यौः प्रज्ञा विश्वमानिनी ॥४१॥
स्मृतिर्वाग्विश्वजननी पश्यन्ती मध्यमा समा ।
संध्या मेधा प्रभा भीमा सर्वाकारा सरस्वती ॥४२॥
काङ्क्षा माया महामाया मोहिनी माधवप्रिया ।
सौम्या भोगा महाभोगा भोगिनी भोगदायिनी ॥४३॥
सुधौतकनकप्रख्या सुवर्णकमलासना ।
हिरण्यगर्भा सुश्रोणी हारिणी रमणी रमा ॥४४॥
चन्द्रा हिरण्मयी ज्योत्स्ना रम्या शोभा शुभावहा ।
त्रैलोक्यमण्डना नारी नरेश्वरवरार्चिता ॥४५॥
त्रैलोक्यसुन्दरी रामा महाविभववाहिनी ।
पद्मस्था पद्मनिलया पद्ममालाविभूषिता ॥४६॥
पद्मयुग्मधरा कान्ता दिव्याभरणभूषिता ।
विचित्ररत्नमुकुटा विचित्राम्बरभूषणा ॥४७॥
विचित्रमाल्यगन्धाढ्या विचित्रायुधवाहना ।
महानारायणी देवी वैष्णवी वीरवन्दिता ॥४८॥
कालसंकर्षिणी घोरा तत्त्वसंकर्षिणी कला ।
जगत्सम्पूरणी विश्वा महाविभवभूषणा ॥४९॥
वारुणी वरदा व्याख्या घण्टाकर्णविराजिता ।
नृसिंही भैरवी ब्राह्मी भास्करी व्योमचारिणी ॥५०॥
ऐन्द्री कामधेनुः सृष्टीः कामयोनिर्महाप्रभा ।
दृष्टा काम्या विश्वशक्तिर्बीजगत्यात्मदर्शना ॥५१॥
गरुडारूढहृदया चान्द्री श्रीर्मधुरानना ।
महोग्ररूपा वाराही नारसिंही हतासुरा ॥५२॥
युगान्तहुतभुग्ज्वाला कराला पिङ्गला कला ।
त्रैलोक्यभूषणा भीमा श्यामा त्रैलोक्यमोहिनी ॥५३॥
महोत्कटा महारक्ता महाचण्डा महासना ।
शङ्खिनी लेखिनी स्वस्थालिखिता खेचरेश्वरी ॥५४॥
भद्रकाली चैकवीरा कौमारी भवमालिनी ।
कल्याणी कामधुग्ज्वालामुखी चोत्पलमालिका ॥५५॥
बालिका धनदा सूर्या हृदयोत्पलमालिका ।
अजिता वर्षिणी रीतिर्भरुण्डा गरुडासना ॥५६॥
वैश्वानरी महामाया महाकाली विभीषणा ।
महामन्दारविभवा शिवानन्दा रतिप्रिया ॥५७॥
उद्रीतिः पद्ममाला च धर्मवेगा विभावनी ।
सत्क्रिया देवसेना च हिरण्यरजताश्रया ॥५८॥
सहसावर्तमाना च हस्तिनादप्रमोदिनी ।
हिरण्यपद्मवर्णा च हरिभद्रा सुदुर्धरा ॥५९॥
सूर्या हिरण्यप्रकटसदृशी हेममालिनी ।
पद्मानना नित्यपुष्टा देवमाताऽमृतोद्भवा ॥६०॥
महाधना च या श्रृङ्गी कार्दमी कम्बुकन्धरा ।
आदित्यवर्णा चन्द्राभा गन्धद्वारा दुरासदा ॥६१॥
वरार्चिता वरारोहा वरेण्या विष्णुवल्लभा ।
कल्याणी वरदा वामा वामेशी विन्ध्यवासिनी ॥६२॥
योगनिद्रा योगरता देवकी कामरूपिणी ।
कंसविद्राविणी दुर्गा कौमारी कौशिकी क्षमा ॥६३॥

कात्यायनी कालरात्रिर्निशितृप्ता सुदुर्जया ।
विरूपाक्षी विशालाक्षी भक्तानां परिरक्षिणी ॥६४॥
बहुरूपा स्वरूपा च विरूपा रूपवर्जिता ।
घण्टानिनादबहुला जीमूतध्वनिनिःस्वना ॥६५॥
महादेविन्द्रमथिनी भ्रुकुटीकुटिलानना ।
सत्योपयाचिता चैका कौबेरी ब्रह्मचारिणी ॥६६॥
आर्या यशोदा सुतदा धर्मकामार्थमोक्षदा ।
दारिद्र्यदुःखशमनी घोरदुर्गार्तिनाशिनी ॥६७॥
भक्तार्तिशमनी भव्या भवभर्गापहारिणी ।
क्षीराब्धितनया पद्मा कमला धरणीधरा ॥६८॥
रुक्मिणी रोहिणी सीता सत्यभामा यशस्विनी ।
प्रज्ञाधारमितप्रज्ञा वेदमाता यशोवती ॥६९॥
समाधिर्भावना मैत्री करुणा भक्तवत्सला ।
अन्तर्वेदी दक्षिणा च ब्रह्मचर्यपरा गतिः ॥७०॥
दिक्षा वीक्षा परीक्षा च समीक्षा वीरवत्सला ।
अम्बिका सुरभिः सिद्धा सिद्धविद्याधरार्चिता ॥७१॥
सुदीक्षा लेलिहाना च कराला विश्वपूरका ।
विश्वसंधारिणी दीप्तिस्तापनी ताण्डवप्रिया ॥७२॥
उद्भवा विरजा राज्ञी तापनी बिन्दुमालिनी ।
क्षीरधारा सुप्रभावा लोकमाता सुवर्चसा ॥७३॥
हव्यगर्भा चाज्यगर्भा जुहृवतो यज्ञसम्भवा ।
आप्यायनी पावनी च दहनी दहनाश्रया ॥७४॥
मातृका माधवी मुख्या मोक्षलक्ष्मीर्महर्द्धिदा ।
सर्वकामप्रदा भद्रा सुभद्रा सर्वमङ्गला ॥७५॥
श्वेता सुशुक्लवसना शुक्लमाल्यानुलेपना ।
हंसाहीनकरी हंसी हृद्या हृत्कमलालया ॥७६॥
सितातपत्रा सुश्रोणी पद्मपत्रायतेक्षणा ।
सावित्री सत्यसंकल्पा कामदाकामकामिनी ॥७७॥
दर्शनीया दृशा दृश्या स्पृश्या सेवा वराङ्गना ।
भोगप्रिया भोगवती भोगीन्द्रशयनासना ॥७८॥
आर्द्रा पुष्करिणी पुण्या पावनी पापसूदनी ।
श्रीमती च शुभाकारा परमैश्वर्यभूतिदा ॥७९॥
अचिन्त्यानन्तविभवा भवभावविभावनी ।
निश्रेणिः सर्वदेहस्था सर्वभूतनमस्कृता ॥८०॥
बला बलाधिका देवी गौतमी गोकुलालया ।
तोषिणी पूर्णचन्द्राभा एकानन्दा शतानना ॥८१॥
उद्याननगरद्वारहर्म्योपवनवासिनी ।
कूष्माण्डा दारुणा चण्डा किराती नन्दनालया ॥८२॥
कालायना कालगम्या भयदा भयनाशिनी ।
सौदामनी मेघरवा दैत्यदानवमर्दिनी ॥८३॥
जगन्माताभयकरी भूतधर्त्री सुदुर्लभा ।
काश्यपी शुभदात्री च वनमाला शुभा वरा ॥८४॥
धन्या धन्येश्वरी धन्या रत्नदा वसुवर्धिनी ।
गान्धर्वी रेवती गङ्गा शकुनी विमलानना ॥८५॥
इडा शान्तिकरी चैव तामसी कमलालया ।
आज्यपा वज्रकौमारी सोमपा कुसुमाश्रया ॥८६॥

जगत्प्रिया च सरथा दुर्जया खगवाहना।
मनोभवा कामचारा सिद्धचारणसेविता ॥८७॥
व्योमलक्ष्मीर्महालक्ष्मीस्तेजोलक्ष्मीः सुजाज्वला।
रसलक्ष्मीर्जगद्योनिर्गन्धलक्ष्मीर्वनाश्रया ॥८८॥
श्रवणा श्रावणी नेत्री रसनाप्राणचारिणी।
विरिञ्चिमाता विभवा वरवारिजवाहना ॥८९॥
वीर्या वीरेश्वरी वन्द्या विशोका वसुवर्धिनी।
अनाहता कुण्डलिनी नलिनी वनवासिनी ॥९०॥
गान्धारिणीन्द्रनमिता सुरेन्द्रनमिता सती।
सर्वमङ्गल्यमाङ्गल्या सर्वकामसमृद्धिदा ॥९१॥
सर्वानन्दा महानन्दा सत्कीर्तिः सिद्धसेविता।
सिनीवाली कुहू राका अमा चानुमतिर्द्युतिः ॥९२॥
अरुन्धती वसुमती भार्गवी वास्तुदेवता।
मायूरी वज्रवेताली वज्रहस्ता वरानना ॥९३॥
अनघा धरणिर्धीरा धमनी मणिभूषणा।
राजश्री रूपसहिता ब्रह्मश्रीर्ब्रह्मवन्दिता ॥९४॥
जयश्रीर्जयदा ज्ञेया सर्गश्रीः स्वर्गतिः सताम्।
सुपुष्पा पुष्पनिलया फलश्रीर्निष्कलाप्रिया ॥९५॥
धनुर्लक्ष्मीस्त्वमिलिता परक्रोधनिवारिणी।
कद्रूर्धनायुः कपिला सुरसा सुरमोहिनी ॥९६॥
महाश्वेता महानीला महामूर्तिर्विषापहा।
सुप्रभा ज्वालिनी दीप्तिस्तृप्तिर्व्याप्तिः प्रभाकरी ॥९७॥
तेजोवती पद्मबोधा मदलेखारुणावती।
रत्ना रत्नावली भूता शतधामा शतापहा ॥९८॥
त्रिगुणा घोषिणी रक्ष्या नर्दिनी घोषवर्जिता।
साध्यादितिर्दितिर्देवी मृगवाहा मृगाङ्कगा ॥९९॥
चित्रनीलोत्पलगता वृषरत्नकराश्रया।
हिरण्यरजतद्वन्द्वा शङ्खभद्रासनस्थिता ॥१००॥
गोमूत्रगोमयाक्षीरदधिसर्पिर्जलाश्रया।
मरीचिश्चीरवसना पूर्णा चन्द्रार्कविष्टरा ॥१०१॥
सुसूक्ष्मा निर्वृतिः स्थूला निवृत्तारातिरेव च।
मरीचिर्ज्वालिनी धूम्रा हव्यवाहा हिरण्यदा ॥१०२॥
दायिनी कालिनी सिद्धिः शोषिणी सम्प्रबोधिनी।
भास्वरा संहतिस्तीक्ष्णा प्रचण्डज्वलनोज्ज्वला ॥१०३॥
साङ्गा प्रचण्डा दीप्ता च वैद्युतिः सुमहाद्युतिः।
कपिला नीलरक्ता च सुषुम्णा विस्फुलिङ्गिनी ॥१०४॥
अर्चिष्मती रिपुहरा दीर्घा धूमावली जरा।
सम्पूर्णमण्डला पूषा स्त्रंसिनी सुमनोहरा ॥१०५॥
जया पुष्टिकरीच्छाया मानसाहृदयोज्ज्वला।
सुवर्णकरणी श्रेष्ठा मृतसंजीवनी रणे ॥१०६॥
विशल्यकरणी शुभ्रा संधिनी परमौषधिः।
ब्रह्मिष्ठा ब्रह्मसहिता ऐन्दवी रत्नसम्भवा ॥१०७॥
विद्युत्प्रभा बिन्दुमती त्रिस्वभावागुणाम्बिका।
नित्योदिता नित्यहृष्टा नित्यकामकरीषिणी ॥१०८॥
पद्माङ्का वज्रचिह्ना च वक्रदण्डविभासिनी।
विदेहपूजिता कन्या माया विजयवाहिनी ॥१०९॥
मानिनी मङ्गला मान्या मानिनी मानदायिनी।
विश्वेश्वरी गणवती मण्डला मण्डलेश्वरी ॥११०॥
हरिप्रिया भौमसुता मनोज्ञा मतिदायिनी।
प्रत्यङ्गिरा सोमगुप्ता मनोऽभिज्ञा वदन्मतिः ॥१११॥
यशोधरा रत्नमाला कृष्णा त्रैलोक्यबन्धनी।
अमृता धारिणी हर्षा विनता वल्लकी शची ॥११२॥
संकल्पा भामिनी मिश्रा कादम्बर्यमृता प्रभा।
अगता निर्गता वज्रा सुहिता सहिताक्षता ॥११३॥
सर्वार्थसाधनकरी धातुर्धारणिकामला।
करुणाधारसम्भूता कमलाक्षी शशिप्रिया ॥११४॥
सौम्यरूपा महादीप्ता महाज्वाला विकाशिनी।
माला काञ्चनमाला च सद्वज्रा कनकप्रभा ॥११५॥
प्रक्रिया परमा योक्त्री क्षोभिका च सुखोदया।
विजृम्भणा च वज्राख्या श्रृङ्खला कमलेक्षणा ॥११६॥
जयंकरी मधुमती हरिता शशिनी शिवा।
मूलप्रकृतिरीशानी योगमाता मनोजवा ॥११७॥
धर्मोदया भानुमती सर्वाभासा सुखावहा।
धुरन्धरा च बाला च धर्मसेव्या तथागता ॥११८॥
सुकुमारा सौम्यमुखी सौम्यसम्बोधनोत्तमा।
सुमुखी सर्वतोभद्रा गुह्यशक्तिर्गुहालया ॥११९॥
हलायुधा चैकवीरा सर्वशस्त्रसुधारिणी।
व्योमशक्तिर्महादेहा व्योमगा मधुमन्मयी ॥१२०॥
गङ्गा वितस्ता यमुना चन्द्रभागा सरस्वती।
तिलोत्तमोर्वशी रम्भा स्वामिनी सुरसुन्दरी ॥१२१॥
बाणप्रहरणा बाला बिम्बोष्ठी चारुहासिनी।
ककुद्मिनी चारुपृष्ठा दृष्टादृष्टफलप्रदा ॥१२२॥
काम्याचरी च काम्या च कामाचारविहारिणी।
हिमशैलेन्द्रसंकाशा गजेन्द्रवरवाहना ॥१२३॥
अशेषसुखसौभाग्यसम्पदां योनिरुत्तमा।
सर्वोत्कृष्टा सर्वमयी सर्वा सर्वेश्वरप्रिया ॥१२४॥
सर्वाङ्गयोनिः साव्यक्ता सम्प्रधानेश्वरेश्वरी।
विष्णुवक्षःस्थलगता किमतः परमुच्यते ॥१२५॥
परा निर्महिमा देवी हरिवक्षःस्थलाश्रया।
सा देवी पापहन्त्री च सांनिध्यं कुरुतान्मम ॥१२६॥

॥ फलश्रुतिः ॥

इति नाम्नां सहस्त्रं तु लक्ष्म्याः प्रोक्तं शुभावहम्।
परावरेण भेदेन मुख्यगौणेन भागतः ॥१२७॥
यश्चैतत् कीर्तयेन्नित्यं श्रृणुयाद् वापि पद्मज।
शुचिः समाहितो भूत्वा भक्तिश्रद्धासमन्वितः ॥१२८॥
श्रीनिवासं समभ्यर्च्य पुष्पधूपानुलेपनैः।
भोगेश्च मधुपर्काद्यैर्यथाशक्ति जगद्गुरुम् ॥१२९॥
तत्पार्श्वस्थां श्रियं देवीं सम्पूज्य श्रीधरप्रियाम्।
ततो नामसहस्रेण तोषयेत् परमेश्वरीम् ॥१३०॥
नामरत्नावलीस्तोत्रमिदं यः सततं पठेत्।
प्रसादाभिमुखीलक्ष्मीः सर्वं तस्मै प्रयच्छति ॥१३१॥
यस्या लक्ष्म्याश्च सम्भूताः शक्तयो विश्वगाः सदा।

